॥ निरुक्तोपनिषत् ॥

स यद्यनुरुध्यते तद्भवति । यदि धर्मोऽनुरुध्यते तदेवोद्भवति । यदि ज्ञानमनुरुध्यते तदमृतो भवति । यदि काममनुरुध्यते सञ्चरतां इमां योनिं सन्दध्यात्तदिदमत्र मनः श्लेष्मरेतसः सम्भवति । श्लेष्मणो रसः । रसाच्छोणितम् । शोणितान्मांसम् । मांसान्मेदः । मेदसः स्नावा । स्नावोऽस्थीनि । अस्थिभ्यो मज्जा । मज्जातो रेतः । तदिदं योनौ रेतः सिक्तं पुरुषः सम्भवति । शुक्रातिरेके पुमान् भवति । शोणितातिरेके स्त्री भवति । द्वाभ्यां समेन नपुंसको भवति । शुक्रभिन्नेन यमो भवति । शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च कथमिदं शरीरं परं संयम्यते । सौम्यो भवत्येकरात्रोषितं कललं भवति । पञ्चरात्राबुद्बुदः । सप्तरात्रात् पेशी । द्विसप्तरात्रादर्बुदः । पञ्चविंशतिरात्रस्थितो योनौ घनो भवति । मासमात्रात् कठिनो भवति । द्विमासाभ्यन्तरे शिरः सम्पद्यते । मासत्रयेण ग्रीवाव्यादेशः । मासचतुष्केण त्वग्व्यादेशः । पञ्चमे मासे नखरोमव्यादेशः । षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति । सप्तमे चलनसमर्थो भवति । अष्टमे बुद्ध्याध्यवस्यते । नवमे सर्वाङ्गसम्पूर्णो भवति ॥

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
नानायोनिसहस्राणि मया यान्युषितानि वै ॥

आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥

अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः ।
साङ्ख्यं योगं समभ्यस्य पुरुषं पञ्चविंशकम् ॥ इति ॥

ततश्च दशमे मासे प्रजायते । जातश्च वायुना स्पृष्टो न स्मरति जन्म मरणम् । अन्ते च शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥

इति निरुक्तोपनिषदि विंशतितमोध्यायः ।

अष्टोत्तरं सन्धिशतमष्टाकपालं शिरः सम्पद्यते । षोडश वपापलानि । नव स्नायुशतानि । सप्तशतं पुरुषस्य मर्माणि । अर्धचतस्रो रोमाणि कोटयः । हृदयं ह्यष्टकपलानि । द्वादशकपलानि जिह्वा । वृषणो ह्यष्टसुपर्णौ । तत उपस्थगुदयोन्येतन्मूत्रपुरीषं

कस्मादाहारापानसिक्तत्वादनुपचति । कर्मणा अन्योन्यं जायत इति । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । महत्यज्ञानतमासि मग्नो जरामरणक्षुत्पिपासाशोकक्रोधद्रोहलोभमोहमदभयमत्सर-हर्षविषादेर्ष्यासूयात्मकैर्द्वन्द्वैरभिभूयमानः सोऽस्मादार्जवं जवीभावनान्तं निर्मुच्यते । सोऽस्मादान्तं महाभूमिकावत् शरीरान्निमेषमात्रैः प्रक्रम्य प्रकृतिभिरभिपरीत्य तैजसं शरीरं कृत्वा कर्मणानुरूपं फलमनुभूय तस्य संक्षये पुनरिमं लोकं प्रतिपद्यते ॥

इति निरुक्तोपनिषदि एकविंशोऽध्यायः ॥

इति निरुक्तोपनिषत् समाप्ता ॥